T. C. Minavathi ammal
1763 Mission Hospital Road
~~Myady~~ Mandy Mohallaa
Mysore

---

டி. சி. மீனவதி அம்மாள்
1763 மிஷின் ஹாஸ்பிடல் ரோடு
மண்டி மொஹல்லா
தே 3/2 மைசூர்

22



- श्रीः -

- श्रीमते रामानुजाय नमः -
- श्रीहयवदनपरब्रह्मणे नमः -

~~[illegible]~~ तिरुनारणैय्यंगार्यविरचितया
बालबोधिनी
इत्याख्यया व्याख्यया सहिता

# लघुकौमुदी

प्रारब्धदिनं २-३-१९३९ (2-3-1939)

समाप्ति दिनं

भा॥ पं॥ नरसिंहाचार्यैः (श्रीवगिपुरं नंबि मलः)

॥ श्री यदुगिरि ॥ (मेलुकोट)
(यति शैलं)

श्रीः

श्रीमते रामानुजाय नमः

## पीठिकाप्रकरणम्

(पेर नंबर 1) व्याक्रियन्ते विशेषेण आक्रियन्ते तत्तत्प्रकृतिविकृत्याद्याकारविशिष्टाः क्रियन्ते शब्दाः अनेनेति व्युत्पत्त्या शब्दपरिष्कारबोधकं शास्त्रं व्याकरणमुच्यते॥

(पेर नम्बर 2)॥ अनेन च शब्दानां सुबन्ततिङन्तात्मना प्राधान्येन प्रकृतिप्रत्ययविभागः शब्दान्तरेण सहाकाङ्क्षायोग्यताप्रत्यायकसंसर्गः स्वार्थेन सह वाच्यवाचकभावविषयान्व्युत्पत्तिश्चेत्येवमादिकं बहुप्रयोजनमुपलभ्यते तत्र तिङन्तशब्दानां प्रकृतिर्धातुरित्युच्यते। तिङिति तिङ् प्रत्याहारघटकाः तिप्, तस्, झि,। सिप्, थस्, थ,। मिब्, वस्, मस्,॥ त, तां, झ,। थास्, आथां, ध्वं,। इड्, वहि, महिङ्॥ इत्यष्टादश प्रत्ययाः गृह्यन्ते। एतदन्ताः धातवः तिङन्ताः इत्युच्यन्ते। एषामेव प्रत्ययानां नवात्मनेपदसंज्ञिकाः त, तां, झ, इत्यादयः

नव परस्मैपद संज्ञिकाः तिप्, तस्, झि, इत्यादयः। एषु प्रत्येकशः :-

- आत्मनेपदे -

| | | |
|---|---|---|
| त | आतां | झ |
| थास् | आथां | ध्वं |
| इट् | वहि | महिङ् |

इति त्रयस्त्रयः प्रथम, मध्यमोत्तम संज्ञिकाः भवंति। एवं परस्मैपदेपि॥

॥ (पेर नंबर 3) एवं धातोस्सकाशात् येयेन्येपि प्रत्यया भवन्ति तेषां कृदिति संज्ञा भवति। एवं च धातोस्तिङ् संज्ञकाः कृत्संज्ञिकाश्च प्रत्यया विधीयंते। तदुत्तरत्र वक्ष्यते सूत्रकारेण कृदतिङ् इति॥

॥ (पेर नंबर 4) एवं सुबन्तशब्दानां प्रकृतिः प्रातिपदिक संज्ञा भवति। (1) कृदंताः (2) तद्धितान्ताः (3) समासाः (4) अव्ययानि (5) अनुकरणानि (6) कानिचिदव्युत्पन्नानि च शब्दस्वरूपाणि प्रातिपदिक संज्ञिकानि भवन्ति। एभ्यस्सुप् संज्ञिकाः :-

| | | |
|---|---|---|
| सु | औ | जस् |
| अम् | औट् | शस् |
| टा | भ्यां | भिस् |

| | | |
|---|---|---|
| ङे | भ्यां | भ्यस् |
| ङसि | भ्यां | भ्यस् |
| ङस् | ओस् | आं |
| ङि | ओस् | सुप् |

इत्येकविंशतिः प्रत्ययाः सप्तधा विभक्ताः प्रत्येकशः प्रथमादि सप्तमांत तत्तत्संख्या संख्येय विभक्तिसंज्ञया प्रवर्तंते ॥

॥ (पेरनंबर(5) तत्र तद्धितसंज्ञिकाः प्रत्ययाः 'समर्थानां प्रथमाद्वा' इत्यादिना वक्ष्यंते। ते तु प्रथमादिविभक्त्यन्ताद्भवंति तत्रत्या रूपप्रक्रियास्तत्प्रकरणे स्पष्टं वक्ष्यंते॥

॥(पेरनंबर 6) एवं च प्रत्ययाः कृतः, तद्धितांताः, तिङः, सुप इचेति चतुर्विधाः॥

॥ (पेरनंबर 7) प्रकृतयश्च धातुः, प्रातिपदिकं चेति द्विविधाः एवंविध प्रकृति प्रत्यय विभाग विज्ञानं विना शब्दप्रयोगो दुश्शक इति व्याकरणशास्त्रं तज्ज्ञानायोपयुज्यते, तत्रः-

ऐन्द्रं चान्द्रं काशकृत्स्नं ॥
कौमारं शाकटायनम् ॥
सारस्वतं चापिशलम्।
शाकल्यं पाणिनीयकं ॥

इन्द्रः, चन्द्रः, काशकृत्स्नः, कुमारः, शाकटायन

सरस्वती, आपिशलः, शाकल्यः, चेति प्राचीना।
अष्टौ निबंधारः निर्बबंधुर्बहूनि ग्रंथजातानि
अथापि तेषु विस्तरवैयर्थ्य संक्षेपादिभिः
अर्थानां दुर्बोधतया पाणिन्याचार्यैः सुबोधं
अष्टभिरध्यायैः परिकल्पितं सूत्रजातं नि-
बद्धं पाणिनीयं व्याकरणशास्त्रमिति सु
प्रसिद्धं वर्तते तत्रैकैकस्मिन्नध्याये चत्वारःपादाः
7० सन्ति तत्रत्यानि सूत्राणि च संज्ञा, परिभाषा, विधि
अधिकारनिमित्तानि चतुर्विधानि तत्र तत्र-
स्फुटीभविष्यन्ति॥

॥(पैरनंबर 4) एषां सूत्राणां महाभाष्यादि
बहुग्रंथसाध्यतया मन्वयेनार्थबोधस्य दुर्गमत्-
तया भट्टोजिदीक्षितेन सिद्धान्तकौमुदीनाम्नी
सुस्पष्टार्थीकापि कृतिर्व्यलेखि। सा च व्याकरण
शास्त्रेऽस्मिं प्रथमप्रविष्टानां बालकानां बहुकालाभ्या
ससाध्यतया वरदराजपंडितेन लघुकौमुद्यां
सिद्धांतकौमुदीस्थवाक्यैरेव संगृहीता। अस्मा
भिस्तत्रापि बालानां दुर्बोधतां आलोच्य विद्वज्ज
नप्रेरणया सूत्रघटितपदार्थव्युत्पत्त्यै तत्र तत्र
दीर्घिगाभिप्रायपदानां स्फुटं प्रकाशनायायं
संदर्भः समारभ्यते अयं च कौमुदीमध्येतुकामा
नां अत्यंतोपकाराय भवति॥ इदं च व्याकर

णशास्त्रे तत्तत्सूत्रेषु वेधितार्थबोधाय संज्ञास-
त्रैः केचित्संकेताः उपदिश्यन्ते ॥

॥ (पेरम्नंबर 1) तेषु (1) अण् (2) अक् (3) अच्, (4) अट्, (5) अल् (6) अश् (7) इण् (8) इक् (9) इच् (10) एङ् (11) एच् (12) ऐच् ओङ् (13) हल् (14) हश् (15) यर् (16) वय् वल् (17) रल् (19) यण्, (20) झय् (21) झल् (22) झष् (23) जश् (24) बश् (25) खर् (26) छव् (27) चर् (28) शल् (29) शर् इत्यादि रूपाः प्रत्याहारसंज्ञिकाः प्राधान्येन प्रवृत्ताः। एताश्च प्रायशः सर्वेषु सूत्रेषु अर्थबोधायात्यन्तमपेक्षिताः यथा:-

इको यणचि इति सूत्रे इक्, यण्, अच्, इति प्रत्त्रयं प्रत्याहारात्मकोऽक संज्ञास्वरूपापरिज्ञाने बोद्धुमेव न शक्यते ॥

॥ (पेर नंबर 10) एवं (1) इत्, (2) लोपः (3) ह्रस्वं (4) दीर्घं (5) प्लुतं (6) उदात्तं (7) अनुदात्तं (8) स्वरितं (9) अनुनासिकं (10) सवर्णं (11) संहिता (12) संयोगः (13) (14) पदं (15) प्रातिपदिकं (16) गुणः (17) वृद्धिः (18) अपृक्तः (19) वृद्धं (20) अव्ययानि (21) धातु (22) सर्वनामानि (23) उपसर्गाः (24) टि (25) नदी (26) घि (27) भम् (28) प्रगृह्यम् इत्याद्याः अपि संज्ञाः संज्ञासूत्रेषूपदिश्यन्ते ॥

॥ (पेर नंबर 11) एतासु संज्ञासु काश्चन

बहुषु सूत्रेष्वर्थबोधसौकर्यायापेक्ष्यन्ते। ताः सिद्धान्तकौमुद्यां लघुकौमुद्यां च संज्ञाप्रकरणे प्रदर्शिताः काश्चिच्च कतिपयसूत्रेष्वपेक्षिताः न बहुत्र व्याप्नुवन्ति। ताश्च तत्तदावश्यकप्रकरणेषु प्रदर्श्यन्ते॥

इति श्री राजाधिराजयतिराज
प्रीतिपात्रे यतिशैलनिवस
तः गोमठं निरुनारणे
य्यंगार्यस्य कृतौ
लघुकौमुदीव्या
ख्यायां बालबोधि
न्याख्यायां व्याख्या
यां पीठिकाप्रक
रणं समाप्तं

10-11-1939

– श्रीः –

श्रीमते रामानुजाय नमः

## – अथ संज्ञाप्रकरणम् –

(प्रेरनंबर १२) प्रकृते च पाणिन्याचार्यैः तपःसन्तुष्टेन श्रीमहेश्वरात् प्राप्तानि :–

(1) अ इ उ ण् (2) ऋ ऌ क् (3) ए ओ ङ् (4) ऐ औ च् (5) ह य व र ट् (6) ल ण् (7) ञ म ङ ण न म् (8) झ भ ञ् (9) घ ढ ध ष् (10) ज ब ग ड द श् (11) ख फ छ ठ थ च ट त व् (12) क प य् (13) श ष स र् (14) ह ल् ॥ इति चतुर्दश सूत्राणि लेभे। तान्येवाष्टाध्याय्या मूलभूतानि। एभिरेव चतुर्दशभिस्सूत्रैः वीडिका प्रकरणोक्ताः अण्, अक्, अच्, इत्यादयः प्रत्याहारास्सिध्यन्ति। ते च बहूनां अक्षराणां संग्राहकतया प्रत्याह्रियन्ते संगृह्य बोध्यन्ते एभिः इति व्युत्पत्त्या प्रत्याहारा इति व्यपदिश्यन्ते। एतेषु चतुर्दशसूत्रेषु आद्याक्षराणां अ इ उ इत्यादीनां अन्त्याक्षरैः णकारादिभिः मेलनेन अण्, अक्, अच्, अश्, इण्, इत्यादयस्सिध्यन्ति। ते च आद्याक्षरं यस्मिन् सूत्रे वर्तते अन्त्याक्षरं च

संज्ञाप्रकरणे माहेश्वर सूत्राणि

सूत्रांत्ये वर्तते तत्सूत्रस्थ तदक्षरमारभ्य अंत्याक्षरविशिष्टतादृश सूत्रांतरांत्य वर्णपर्यंतानां वर्णानां ग्राहका भवंति यथा:-

अच् इति (१) अ इ उ ण् सूत्रस्थ अकार मारभ्य (४) ऐ औ च् सूत्रस्थ चकारपर्यंतं वर्तमानान् अ इ उ ऋ ऌ ए ओ ऐ औ वर्णान् बोधयति. एवं प्रत्याहार सौकर्यार्थोपात्तानि चतुर्दश सूत्राणि माहेश्वरादागतानीति व्युत्पत्त्या माहेश्वराणीति व्यवह्रियंते। महेश्वर शब्दादण् प्रत्ययः। एषु सूत्रेषु अकारमारभ्य हकारपर्यंतानि त्रिचत्वारिंशदक्षराण्येवोपात्तानि इत्यपि वदंति। अक्षर समाम्नायः शास्त्र इत्यक्षर समाम्नाय इत्यपि वदंति॥

॥(पेर नंबर ।३) अतएव एषु सूत्रेषु त्रयोदशाण्यक्षराणि च समाम्नायिकानीति सिद्धांतकौमुद्यामुक्तं अक्षरसमाम्नायशब्दाघटक प्रत्ययः॥

॥५॥ ॥(पेर नंबर ।५) एषां उक्तानां प्रत्याहाराणां ग्राहकं सूत्रं

(५) आदिरन्त्येन सहेता (१.१.७१)

इति। आदिः, अंत्येन, सह, इता, इति छेदः। अंत्येनेति तृतीया सहेति सहितार्थक

'मध्ययं इत्ता इति तृतीया अंतेभकमंत्यं
तच्च इतेत्यत्र विशेषणं इतेति सहयोगाद्
प्रधाने तृतीया सहपदद्वारा प्रधानेनाति पदे
नान्वेति 'इत' च पुत्रेण सहागतः पिता इ
त्यादौ पुत्रादेः न पित्रा न्वायकत्व इत्य
वर्णस्य संज्ञा॥

॥(पेर नंबर 5) एवं चांत्येनेत्यंति
मेन इतेति सांदुकेन वर्णेन सहेति सहितः
आदिरित्यादिभूतो वर्णः इति अण इत्यादयः
अण् च प्रत्याहाराः अन्ते सूत्रे णोपदिष्टा
भवतीति सूत्रार्थः॥ तदाहवृत्तौ। 'अंत्येनेता
सहित आदिरिति' एवं अण इत्यादीनाक्ष
रघटनात्मक संज्ञा न निष्प्रयोजनाभवति
सूत्रकर्तुर्व्यर्थप्रयासत्वापत्तेः। अतः एभिः
प्रत्याहारैः कश्चिदर्थो ज्ञातव्यः स्यात् अ
त स्वतुभयमध्यवर्तिनः तदादिमवर्णाश्च
एवमर्थो भवतीत्यर्थाः सिध्यन्ति तदेतदाह:
मध्यगानां स्वस्य च संज्ञा स्यादिति उदाहर
ति यथा अणिति अ इ उ वर्णानां संज्ञा एव
अक्, अच्, हल्, अलित्यादयः इति ॥5॥

॥1॥ ॥(पेर नंबर 6) अस्य सूत्रस्येति
पदघटितस्य पदार्थज्ञानसापेक्षतया घटक-

ज्ञानं प्रति घटितज्ञानं कारणमिति न्यायेन तद-
र्थज्ञाने कारणीभूत तत्पदार्थज्ञानसाधनं सू-
त्रं प्रथममाह दीक्षितः

(1) हलन्त्यं (1.3.3) इति ~~हलं अंत्यं, इति छेद~~
अंते भवमंत्यं हलि + अंत्यं = हलंत्यं इति
विग्रहः उपदेशेऽजनुनासिक इत् इति सू-
त्रादितीत्यनुवर्तते हल पदं हल सूत्रस्य
ग्रहणं परं हलीति सप्तम्याः वृत्तिवमर्थः॥

॥(पैर नंबर।7) सावं च हलंत्यमिति
हल सूत्रस्यांत्यवर्णः इदिति इत्संज्ञिको
भवतीति साकोवाक्यार्थः॥

॥(पैर नंबर।8) अनेन च इत्पदार्थ
ज्ञाने जाते अनंतरं आदिरंत्येनेति सू
त्रार्थज्ञानं भवति। तेन जातेपीत्पदार्थज्ञा
ने आदिरंत्येनेति सूत्रेण हल सूत्रस्य
लकारेण साकं आदिवर्णाना अकार,
इकार, ङकार, रकार, भकार, ज्ञकार,
छकारादीनां प्रत्याहारासिध्यति अ
इउण् इति सूत्रस्यांत्यवर्णः अकारादी
नां नासिध्यति णकारादीनां इत्संज्ञा
याः अलाभात् मनक्षेत्रामपीत्संज्ञा
सिध्यर्थं सूत्रमेतदावश्यकमित्याहर्थः

तरमुत्तां



तरमुत्तां कौमुद्यां हल्, अन्त्यं इति छेदेन। उ
पदेशोजमनुनासिकइदिति सूत्रात् उप
देशे, इत्त्विच तिष्ठति च पदद्वयमनुवर्त्त
ते आद्योच्चारणविषयीभूताः धातुसूत्रा
दयः तदुक्तं: धातुसूत्रेति अन्त्यमित्यन्ति
मं हलित्ति हल् उपदेशे इति धातुसूत्रगणोप
देशावृत्ति प्रत्याहारघटकं अर्थाद्युच्चारणं इवि
ति इत्संज्ञिकं भवति इति तदिमं द्वितीयवा
क्यार्थः। तदाह वरदराजः- उपदेशेऽन्त्यं हलि-
त्स्यादिति॥

॥(पेरनंबर।१) अत्र च हल् पदार्थज्ञा
नं विना हलन्त्यसूत्रस्य द्वितीयवाक्यार्थज्ञा-
नं न ज्ञायते हल् पदार्थज्ञानं च आदिरन्त्ये-
न सहेतेत्यादि ति प्रत्याहारनियामकसू-
त्रेण। सिध्यति इती सदार्थस्य हल् पदार्थस्य
च ज्ञानं विना सूत्रद्वयस्यापि स्वस्वार्थबो
धं प्रति घटितज्ञानसापेक्षत्वनियमानु
रोधेन परस्पराश्रयदोषप्रसक्तौ तत्परिहारा
र्थं हलन्त्यसूत्रस्य प्रथमवाक्यार्थः आवश्यकः
अतएव सिद्धान्तकौमुद्यां हलन्त्यसूत्रं द्विरावर्त्य
वाक्यार्थद्वयमपि प्रत्यपादि तथा हलन्त्यसू
त्रस्य प्रथमवाक्यार्थेन हल्सूत्रांत्य लकार-

स्येत्संज्ञायाँ आदिरन्त्येन सहेतेति सूत्रेण
हल्प्रत्याहारज्ञाने जाते हलन्त्यसूत्रस्य
द्वितीयवाक्यार्थज्ञानं निष्पन्नं हि ॥

॥(पैर नंबर २०) लघुकौमुद्यां तु द्वि
रावृत्तिर्न कृता एकवारोपात्तस्यापि वा
हलन्त्यसूत्रस्य उक्तविधया प्रथमवाक्या
र्थोऽपि नैव प्रदर्शितः अतस्तत्र अन्यो
न्याश्रयदोषो न परिहृतः अतश्च तत्प
रिहारार्थं प्रथमनिरूपितवाक्यार्थः अ
वश्यं उपादाय एकेति सर्वं चतुरश्रम् ॥

॥(पैर नंबर २१) किं चात्र लण्म
ध्येत्वित्संज्ञकः इत्युक्तं तस्य च लण्सूत्रम
ध्ये अकारोऽनुवृत्तिरकारः इत्संज्ञक इ-
त्यर्थः तस्येत्संज्ञायाः जातप्रयोजनं दृ
श्यते तस्य प्रयोजनं तु (२७) उरण्रपरः
(१.१.५१) इति सूत्रव्याख्यानावसरे द्रष्टव्यं
प्रकृते च तदुक्तिः प्रयोजनाजिज्ञास
या कौतुणां न सुबोधा (२८) उपदेशेऽज
नुनासिक इत् (१.३.२) इति सूत्रेण
तद्विधानात् तत्रैव तस्य सुबोधत्वात्
॥२॥ ॥(पैर नंबर २२) अत्रैव सन्दर्भे
इत्संज्ञकानां लोपविधानाय (३) तस्य

लोपः (1.3.9) इति सूत्रे उपादानः कर
वरदराजः तद्भवित लोपपदार्थज्ञानाय (२) अ-
दर्शनं लोपः (1.1.60) इति सूत्रं लोपसंज्ञा
बोधकं प्रथममाह :-

(२) अदर्शनं लोपः (1.1.60) इति
अदर्शनं, लोपः, इति छेदः। न दर्शनं
अदर्शनं दर्शनं चात्र वर्णविषयकं उच्चा-
रणात्मकं तदभावस्य यस्य वर्णस्यो
च्चारणं प्रसक्तं तस्यैवेत्यर्थाल्लभ्यते॥

280 ॥(पेर नंबर २३) शब्दं च अदर्शनमि-
ति उच्चारणीयतया प्रसक्तस्य वर्णस्यानुच्चा
रणं लोपइति लोपसंज्ञकं भवतीति सूत्रार्थः
तदुक्तं वरदराजेन :- प्रसक्तस्यादर्शनं लोपसं
~~ं स्यात् इति एवमनेन सूत्रेण पदार्थज्ञाने~~
~~जाते~~ ज्ञं स्यात् इति॥

॥३॥ ॥(पेर नंबर २४) एवमनेन सूत्रेण
लोपपदार्थज्ञाने जाते लोपपदविशिष्ट
लोपविधायकं सूत्रमाह :-

(३) तस्य लोपः (1.3.9) इति। तस्य,
290 लोपः, इति छेदः। इदं सूत्रमष्टाध्याय्यां इ
त्संज्ञाप्रकरणान्ते वर्तते तत्रापि क्रमः।
(1) उपदेशेऽजनुनासिक इत् (1.3.2)

(२) हलन्त्यं (1.3.3)
(३) न विभक्तौ तुस्माः (1.3.4)
(४) आदिर्ञिटुडवः (1.3.5)
(५) षः प्रत्ययस्य (1.3.6)
(६) चुटू (1.3.7)
(७) लशक्वतद्धिते (1.3.8)
(८) तस्यलोपः (1.3.9) इति

300 अत्राद्यानि सप्तसूत्राणि इत्संज्ञाविधायकानि तत्र प्रकरणे विवियन्ते हलन्त्यसूत्रं ~~विधि~~ इति द्वितीय सूत्रं अत्रैव प्रत्याहारविधायकसूत्रापेक्षया तेत्संज्ञा विधानाय विकृतं प्रकृते तदन्तिमसूत्रस्थं तस्य इदं प्रकृतेत्संज्ञापरं॥

॥(पैर नंबर २५) ग्रावं च तस्येती संज्ञकस्य वर्णस्य लोपइति प्रत्याहारेषु गृहणात्मकं अदर्शनं भवतीति सूत्रार्थः॥

310 ॥(पैर नंबर २६) ग्रावं (१९) संयोगान्तस्यलोपः (8.2.22) (२१) लोपश्शाकल्यस्य (8.3.19) इत्यादि सूत्रेष्वपि लोपपदार्थोज्ञातव्यः तस्य लोपः इति इत्संज्ञिकवर्णानां लोपविधायकं सूत्रं

प्रकृते नार्थं नमुपयुज्यते तस्य लोपसंधि विधायकत्वेन (2) एचोऽयवायावः (6.1.78) इत्यादि संधिप्रकरणमेव वस्तुमौचित्यात् प्रकृते चतुर्दशसूत्रस्थेत्संज्ञकवर्णानां प्रत्याहारार्थं उपात्तत्वेन तेषां लोपस्यानतिप्रयोजनत्वाच्च। अथापि सूत्रान्तराणि वर्णैः सह अकारादीनां प्रत्याहारेषु तदनन्तरभूतानां इत्वर्णानां ण, क्, इत्यादीनां प्रत्याहारेषु ग्रहणं माभूत् इत्येवं तदर्थं तेषां लोप आवश्यक इति सूत्रमिदम् लोपान्तं सिद्धान्तकौमुद्यां तु (1) मुखनासिकावचनोऽनुनासिकः इत्यादि सूत्रस्थेन अनुनासिक इत्यादि सूत्रकारनिर्देशेनैव प्रत्याहारेष्वेतेषां न ग्रहणमिति उक्तं अनुनासिकपदे सकारोत्तरवर्तीकारस्य ककारे परे यण् संधिरावश्यकः ककारस्य अच्प्रत्याहारघटक (2) ऌक्, ऋ, क् स्थत्वेनाच् प्रत्याहारान्तर्भावात् अनुनासिकपदे संधेरकरणेन च ककारस्य ऋ ऌ क् सूत्रस्थत्वेऽपि अच्त्वं नास्तीति ज्ञायते अत एवं अन्येष्वपि प्रत्याहारेषु इत्संज्ञकानां वर्णानां ग्रहणं नास्तीति सिध्यतीति सूत्रकारकृत अनुनासिकादि पदव्यपदेशेन सिद्धस्यास्यार्थस्य संधिप्रकरणसंगत लोपविधायक सूत्रेण

संपादनं न रमणीयमिति दीक्षिताशयः ॥३॥
॥५॥ ॥(पैरनंबर २७) अक्षरसमाम्नाये उक्ता-
नां स्वराणां एकद्वित्रिसंख्याकमात्राभेदेन ह्रस्व
दीर्घप्लुतात्मकसंज्ञान्तरविधानायाह :-
(अ) ऊकालोऽज्झ्रस्वदीर्घप्लुतः (१.२.२७) इति। ऊका-
लः, अच्, ह्रस्वदीर्घप्लुतः, इति छेदः। ह्रस्वं च दी-
र्घं च प्लुतं च इत्येतेषां समाहारः ह्रस्वदीर्घप्लुतः तं
त्रैकवद्भावे एकवचनं सौत्रत्वात्पुंस्त्वं अ इति उ,
ऊ ऊ३ काराणां एकद्वित्रिमात्राणां सवर्णदीर्घः
तथा च उश्च ऊश्च ऊ३श्च वः ऊकारस्य जसि परे
यणादेशे वः इति प्रथमाबहुवचने रूपं आमि ब-
ष्ठीबहुवचने वामिति। तथा च वां कालः इव कालः
यस्य सः ऊकालः इति अच् इत्यत्र विशेषणं॥
॥(पैरनंबर २८) एवं च उ ऊ ऊ३ कारोच्चारण
कालसदृशकालवान् अच् ह्रस्वदीर्घप्लुतः इति
संज्ञां लभते अत्र यश्चात्र यथासंख्यो ज्ञेयः अत
श्च एकमात्रिकोच ह्रस्वं द्विमात्रिकोच दीर्घं त्रिमा-
त्रिकः प्लुतः इति फलितः इति सूत्रार्थः तदुक्तं
वरदराजेन :- वां कालइव कालः सोच क्रमाद्ध्रस्व
ह्रस्वदीर्घप्लुतसंज्ञः स्यात् इति इदं च फलितार्थक-
थनं भाष्यादिषु वः कालः यस्य सः इत्येकवि-
गृहीतं वः इति उ ऊ ऊ३ कारोच्चारणकालेन-

क्ष्यते तथाच उ¹ उ²। उ³ ऊकारोच्चारणकाल एव कालः यस्यसः अच् क्रमेण ह्रस्वदीर्घप्लुतसंज्ञो भवतीति विवृतं ॥

॥(पेर नंबर 28) तत्पक्षे आपाततः उकारोच्चारणकालात्मक कालवान् अच् ऊकारोच्चारणकालात्मककालवानच उ³कारोच्चारणकालात्मककालवानच् इति ऊकाल ग्राह्यार्थे ज्ञेयः अत्र उकारोच्चारणकालः एकमात्रा ऊ²कारोच्चारणकालः द्विमात्रा उ³कारोच्चारणकाल इव त्रिमात्रेति च तत्तत्संख्याक मात्रिकाणामेव क्रमेणोक्त संज्ञा भवति इति सूत्रार्थः ॥5॥

॥6॥ ॥7॥ ॥8॥

॥(पेर नंबर 29) एवं ह्रस्वदीर्घप्लुतात्मना त्रैधाविभिन्नानां स्वराणामेषां प्रत्येकशः उदात्तानुदात्तस्वरितात्मकावान्तरभेदमादाय नवविधत्वं प्रत्यायति सप्रत्येकमुदात्तादि भेदेन त्रिधा इति तत्र उदात्तादिसंज्ञाविधायकानि सूत्राण्याह ÷

(6) उच्चैरुदात्तः (1.2.29)

(7) नीचैरनुदात्तः (1.2.30)

(8) समाहारः स्वरितः (1.2.31) इति

अत्रेदमवधेयं वर्णोत्पत्ति स्थानानि ऊर्ध्वाधोमागयोः अवसितानि । (1) कण्ठः (2) तालुः (3) मूर्धा (4) दन्ताः (5) ओष्ठ (6) नासिका (7) जिह्वामूलं इति सप्त संति तत्र केषांचिद्वर्णानां क्रमशः एकैकमेव

"स्थाने केषांचिद्वर्णानां स्थानद्वयमपि संभवति त
दुत्तरत्र सवर्णसंज्ञासूत्रविवरणावसरे विवेचयिष्य
ते तेषु स्थानेषु ताल्वादिरूपेषु ऊर्ध्वाधोभाग
निष्पन्न अच् उदात्तसंज्ञको भवती प्रथमसूत्रार्थः ॥
॥ (पैरनंबर 30) एषु त्रिष्वपि सूत्रेषु ऊ
कालोऽज्झ्रस्वदीर्घप्लुत इति सूत्रात् अच् इत्यनुवर्तिम
न: उच्चै: नीचै: समाहार: इति पदै विशिष्यन्ते उ-
च्चै: नीचै: इति पदयो: सामान्येन ऊर्ध्वाधोभागपर
त्वेपि प्रकृते अच्संज्ञानां प्रक्रान्ततया उत्पत्तिस्थाने
षूर्ध्वाधोभागयोर्ग्रहणं सिध्यति तत्रश्च उच्चैरिति
ताल्वादिषु ऊर्ध्वभागे उत्पन्न: अच् उदात्त इति
उदात्तसंज्ञिको भवतीति प्रथमसूत्रार्थपरि
पाटीदृश्यते ॥
॥(पैरनंबर 31) तथा नीचैरिति ता-
ल्वादिस्थानेष्वधोभागेषूत्पन्न: अच् इति अच्
प्रत्याहारघटक: अइउ इत्यादिस्वर: प्रत्येकं
ह्रस्वदीर्घप्लुतात्मना त्रेधा विभिन्नस्वर: अनुदात्त
इति अनुदात्तसंज्ञिको भवती द्वितीयसूत्रार्थः
॥(पैरनंबर 32) एवं समाहार: स्वरि
त: इति समाह्रियेते समुच्चीयेते यस्मिन् इति
अधिकरणे घञ् तथाच उदात्तानुदात्तात्म
कवर्णधर्मद्वयस्यापि समुच्चयेन यस्मिन्नचि

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सोच स्वरितइति स्वरित संज्ञिको भवतीति-
तृतीय सूत्रार्थः॥

॥(पेरनंबर ३७) उदात्तत्वंच ऊर्ध्वभागनि
ष्पन्नत्वं। अनुदात्तत्वं याधोभाग निष्पन्नत्वं इति
भागद्वय निष्पन्नोच स्वरितसंज्ञिको भवतीति तृती
यसूत्रार्थः पर्यवसितः उदाहरणानि चैतेषां:-
अग्निमीळे पुरोहितं इत्यादि वेदवाक्येषु द्रष्ट
५।० व्यानि एवं मुख्यावान्तरभेदाभ्यां नवविधानां म
ध्यां प्रत्येकं अनुनासिकत्वानुनासिकत्वाभ्यां पुन
द्वैविध्यमाश्रित्य अष्टादशत्वं प्रत्याययितुमाह
सनवविधो। पीत्यादिना॥ ॥६॥५॥८॥

॥९॥ ॥(पेर नंबर ३५) तत्रानुनासिकसंज्ञाविधा
यकं सूत्रमाह:-

(९) मुखनासिकावचनोनुनासिकः (१.१.८)

इति मुखनासिकावचनः, अनुनासिकः, इति
छेदः मुखसहिता च सा नासिका च मुखनासिका
इति पूर्वमध्यमलोपी समासः शाकपार्थिवादिवत्
५।२० उच्यते उच्चार्यते इति वचनः मुखनासिकायाः वचनः
मुखनासिकावचनः मुखनासिकावचनः इति कृ
द्योगाषष्ठीसमासः वर्णसंज्ञाप्रकरणात्तथावर्ण
इति विशेष्यमुपतिष्ठते॥

॥(पेरनंबर ३६) एवंच मुखनासिकावचनः इति

मुखसहितनासिकयोच्चार्यमाणो वर्ण इति वर्णः
अनुनासिक इति अनुनासिकसंज्ञो भवतीति
सूत्रार्थः॥

॥(पेर नंबर 36) तत्र ऌवर्णस्य दीर्घा न सन्ति
यतो ह्रस्वं नास्ति इति तेषां द्वादशैव भेदाः अइउक
53.0 र्णानां तु ह्रस्वदीर्घप्लुतात्मना तदवान्तरोदात्तानुदा
त्तानुदात्तस्वरितभेदैः नवधा विभिन्नानां अ
नुनासिकाननुनासिकाभ्यां पुनर्द्वैधत्वे आहत्य
प्रत्येकमष्टादशभेदा सिध्यन्ति तत्र ह्रस्वभेदाः ष
ट् दीर्घभेदाः षट् प्लुतप्रभेदाश्च षट् इति विवेकः
ऌवर्णस्य ह्रस्वप्रभेदाः षट् प्लुतप्रभेदाः षट् इति
द्वादशभेदाः दीर्घाभावेन तत्र कृत भेदषट्कस्या
भावात् एवं एचामपि दीर्घप्लुताभावेन प्रत्येकं ष
ट् भेदानां द्वादशविधत्वं चेतदेतदाह; त
दित्थमित्यादिना॥ [9]

55.0 [10] ॥(पेर नंबर 37) अथैषां सवर्णसंज्ञावि
धानायाह ÷

(9) तुल्यास्यप्रयत्नं सवर्णम् (1।1।9) इति
छेदः स्पष्टः तुल्यं च तुल्यश्च तुल्ये नपुंसकैक
शेषः आस्ये भवमास्यं प्रकृष्टो यत्नः प्रयत्नः आ
स्यं च प्रयत्नश्च आस्यप्रयत्नौ तुल्ये + आस्यप्रयत्नौ
यस्य तत् तुल्यास्यप्रयत्नं इति विग्रहः॥

॥(पैरनंबर ३४) आस्यमिति आस्यशब्दात् भवार्थे यत्प्रत्ययः ताल्वादिस्थानमित्यर्थः प्रकृष्टो यत्नश्चाभ्यंतरः नतु बाह्यः तस्य सवर्णसंज्ञायामनुपयुक्तत्वात् एतच्च यत्नद्वयं मूल एव विवृणुते सवर्णमिति नोवर्णग्रहणार्थं यत्नो द्विविधेत्यादिना समानौ वर्णौ सवर्णौ स्तौ नपुंसकं॥ यस्य तत

॥(पैरनंबर ३९) एवं च आस्यमिति ताल्वादिस्थानं प्रयत्न इति आभ्यंतरप्रयत्नस्य यस्य वर्णस्य वर्णान्तरेण तुल्यौ भवतः तेन तत् सवर्णमिति सवर्णसंज्ञं भवतीति सूत्रार्थः संज्ञेयमन्वर्था मिथः समानयोर्वर्णयोस्तदर्थं तत्सवर्णपदेन निर्दिष्टत्वात् संज्ञानिर्देशक सवर्णपदघटक समानपदस्य समानस्थानप्रयत्नकत्वमर्थः वर्णानां स्थानसाम्यं प्रतिपादयति अकुह इत्यादिना नासिकानुस्वारस्य इत्यन्ते आभ्यंतरं यत्नं विवृणोति स्पृष्टेत्यादिना विवृतमेवेत्यन्तेन बाह्यप्रयत्नं विवृणोति विवारस्संवारः इत्यादिना महाप्राणाः इत्यन्तेन तत्र आभ्यंतरप्रयत्नविवरणावसरे स्पृष्टं प्रयतनं स्पर्शानां इत्यत्र स्पर्शानां शब्दः ईषत्स्पृष्टमंतस्थानां इत्यत्र अंतस्थशब्दः ईषद्विवृतमूष्मणां इत्यत्र ऊष्मशब्दः विवृतं स्वराणां इत्यत्र स्वरशब्दश्च अन्वर्थसंज्ञावाचिनः तेषां शब्दानां अर्थं विवृणोति कादयः इत्यादिना अचः स्वराः इत्यन्तेन एवं स्थानविवेचनावसरे अकुह विसर्जनीयानां

'गंकंकः ऽ पूप ध्मानीयानामो हो जिह्वामूली यस्य जिह्वाम
लं नासिकानुस्वारस्य वृत्तिरित्यत्तेषु लिखिताः वि सर्जनी
योपध्मानीयजिह्वामूलीयानुस्वारशङ्का अपि अज्ञाना
काविति तान् विवृणोति अकः कुहूत्वा दिना अं अः इत्यं
च परावनुस्वारविसर्गौ इत्यं तेन अत्रत्य विसर्गशङ्काः
स्थानविवेचनावसरोपात्त विसर्जनीयपरः शावर्म
तत्प्रकरणोपात्त स्पर्शादिशङ्कार्थान् ज्ञात्वा आभ्यंत
अनंतरं आभ्यंतर प्रयत्नविवरणं स्थानविवे
चनसंतु भंचाध्यीयरन् विद्यार्थिनः॥ [10]

[11] ॥ पिरमंबर ५० स्थान किंवचनाव सरेनु
चुटु, तुपु इ ति पर्याय भेदेन अकुहेत्यादौ उ
दिनः वर्गीयवर्णाः उपात्ताः तत् वर्गीयवर्णेतरा
णि अशङ्कतोनोपात्तानि तेषामप्युपादानं उपा
वश्यकं तत्तद्वर्गीयवर्णानां तत्तद्वर्गीयात् परैः
समानस्थानतया तत्स्थान निरूपणार्थमुपा
देयत्वात् सर्वे अइउणादि अक्षरसमाम्नायिक
सूत्रेषु अइउवर्णानां दीर्घप्लुतयोः ऌकारस्य दीर्घ
रहितप्लुतस्य ग्रहणानां सवर्णग्रहणेनानाथ
ग्रहणात् तेषांग्रहणं प्रमाणमातृ ।

(11) अणुदित्सवर्णस्यचाप्रत्ययः (१.१.६९)
अण्, उदित्, सवर्णस्य, च अप्रत्ययः, इति छे
दः आस्मिन् सूत्रे अण् इति णकारमारभ्य

लण् सूत्रस्य णकारपर्यन्तानां प्रत्याहारः उन्न
त्प्रत्ययस्य सः । उदित् प्रतीयते विधीयते इति प्र
त्ययः न प्रत्ययः अप्रत्ययः तांश्च अप्रत्ययः इति
अविधीयमानः अणिति अण् प्रत्याहारघटकीभूतव
र्णः उदिति उकारेतः कुचुटुतुपु इत्यन्यतम
स्य सवर्णस्येति तत्तत्सवर्णस्य ग्राहको भ
वतीति सूत्रार्थः यद्यपि अण् प्रत्याहारः सर्व
त्र अइउण् सूत्रस्थणकारेणैव निष्पाद्यः अ
थापि अत्र ग्राहकशास्त्रे न यवलानां द्व्यर्थस्य
लश्च इति सूत्रयोरुपात्तानां केवलानां अनु
नासिकभेदस्यापि ग्राहकत्वप्रत्यायनार्थं ऋ
ऌवर्णयोः दीर्घप्लुत ग्रहणार्थं मध्यमसुतरां तृण
र्थं च लण् सूत्रस्थणकारपर्यन्तानां संज्ञा होइ यत्र
अत्र प्रयोत्तं वृत्तिकृता अतो वाण् इत्यादिना द्वयो
र्द्वयोस्संज्ञेत्यते इति ॥ [11]

[14 ॥] ॥(पैरांबर 14) उत्तरत्र संधिप्रकरणस्य प्रा
रभ्यमानतया तत्र संहितायाम् इत्यधिक्रियमा
णतया संहिताशब्दार्थज्ञानमावश्यकम् :-

(12) परस्सन्निकर्षः संहिता (1.4.109) इति
परः, सन्निकर्षः, संहिता, इति छेदः परः इति अ
व्यवधान पर्यवसितः अतिशयः अर्थः तच्च व
र्ण संहिता प्रकरणानुरोधेन वर्णानामिति लभ्य

'सन्निकर्षसान्निध्यं मावंच परः इति वर्णानां अत्य
वहितत्व पर्यायातिशायान् सन्निकर्षः इति
सान्निध्यं संहितेति संहिता संज्ञं स्यात् इति
सूत्रार्थः तदाह वृत्तौ वर्णानामतिशायितसान्निधिः
संहितासंज्ञः स्यात् इति॥ ॥१२॥

॥13॥ संयोगसंज्ञामाह :-

(१३) हलोनंतरासंयोगः (१।१।७) इति
हलः, अनंतराः, संयोगः, इति छेदः नवि
द्यते अंतरंव्यवधानं येषामिति अनंतराः
अव्यवहितइत्यर्थः अर्थात् अजभिः इति
लभ्यते अचामेवहल्व्यवधायकत्वात्।
मावंच अनंतर इति अज् व्यवधानरहिताः
हलः इति हल् प्रत्याहारघटकाः वर्णाः सं
योगइति संयोग संज्ञिकाभवंतीति सूत्रा
र्थः ॥13॥

॥१४॥ ॥ (पेरनंबर ५२) वापदांतस्येत्या
दौ संधिप्रकरणस्थ सूत्रे पदपदार्थज्ञापनाय
याह :-

(१४) सुप्तिङंतं पदं (१।४।१४) इति
सुप्तिङंतं, पदं, इति छेदः सुप् च तिङ्
सुप्तिङौ सुप्तिङौ अंते यस्य तत् सुप्ति
ङंतं इति विग्रहः तत्र तं इति शब्दं यम।

णां पदं प्रत्येकमभिसंपद्यते इति न्यायेन अंत पदं द्वन्द्वपदघटक सुप्तिङ्पदयोः प्रत्येकं ईदृशसंब ध्यते सुबिति स्वौजसादि सूत्रस्य सुप्रत्ययमा रभ्य सुप्प्रत्ययस्य पकारेण संहृत प्रत्याहारः तेन च स्वादीनां शाकद्विशतिप्रत्ययानां प्रातिपदिकोत्त राणां ग्रहणं तिङिति च उक्तविधया तिङ्प्र त्याहारस्थानां अष्टादशानां धातूत्तराणां प्रत्ययानां ग्रहणं शाकंच सुप्तिङ्न्तमिति सुबन्तं तिङन्तं च शब्दस्वरूपं पदमिति पदसंज्ञं भवतीति सूत्रार्थः॥ ।।४।।

इति श्रीसाहित्यवेदान्तविदुषा राजा
धिराजयतिराजप्रीतिपात्र यति
शैले निवसतः गोमठं तिरु
नारणेय्यंगार्येरचकृतौ
लघुकौमुदीव्याख्यायां
बालबोधिन्याख्यायां व्या
ख्यायां संज्ञाप्रक
करणं समाप्तम्.

11-12-1939

— श्रीः —

- श्रीमते रामानुजाय नमः -

## — अथ संधिप्रकरणम् —

॥ (पैर नंबर ५३) संधिप्रकरणेषु प्राधान्येन (१) अच् संधिः (२) हल् संधिरिति संधिद्वयं सामान्यतः परिगण्यते तत्र (१) विसर्गसंधिः (२) अनुस्वारसंधिरिति अत्र च संधेरवान्तरत्वेन परिगण्यते लघुकौमुद्यां स्फुटप्रतिपत्यर्थं विसर्गसंधिः पृथक् प्रदर्श्यते तत्र च संधिषु (१) यण् संधिः, प्रसंगात् (२) यरो द्वित्वादेशः (३) न समं (४) संयोगान्तलोपः (५) अयादेशः (६) यथासंख्य नियमः (७) गुण संधिः (८) लोपसंधिः (९) वृद्धिसंधिः, प्रसंगात् (१०) उपसर्गसंज्ञा (११) धातुसंज्ञा (१२) ऋ ऌ कारयोः रादेस्य रलपरत्वं (१३) पररूप संधिः (१४) टि संज्ञा (१५) सवर्णदीर्घ संधिः (१६) पररूपसंधिः (१७) अनुनासिकसंज्ञिकानामचां इत्संज्ञा (१८) सर्वादेश परिभाषा (१९) अंत्यादेश संधिः (२०) अवङादेश संधिः (२१) प्लुत संधिः (२२) प्रगृह्य संज्ञा (२३) प्रकृतिभाव संधिः (२४) चा-

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दीनां प्रादीनां च निपात संज्ञा (२८) उआ
देश संधिः (२८) (बत) संधिः (२८) ह्रस्वादे
श संधि इच प्रतिपाद्यन्ते ॥

— अथ यण् संधिः —

॥15॥ पैरे नंबर ५५) तत्र यण् संधिरिति
अइउऋऌ वर्णानां स्थाने असमस्वरेषु
परेषु यवरलाः आदेशा भवन्ति अत्र च सूत्रम्
(८) इकोयणचि (६.१.७७) इति इकः,
यण्, अचि, इति छेदः इक इति षष्ठी यण्
णिति प्रथमा अचीति सप्तमी संहिता
यामित्यधिक्रियते इक्, यण्, अच् इति
पदानि प्रत्याहार संज्ञाभूतानि तत्र प्रत्या
हारघटकवर्णपराणि इक इति षष्ठ्यन्
तया षष्ठी स्थाने योगेति परिभाषया
स्थाने पदेन संबध्यते अचीति सप्तम्यन्तया
तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषया अ
व्यवहितपूर्वस्य इत्युपस्थितेन संबध्यते ॥
"(पैर नंबर २५)" एवं च अचीति अच्प्र
त्याहारघटकवर्णाव्यवहितपूर्वस्य इक इति
इक्प्रत्याहारघटकवर्णस्य स्थाने यण् इति यण्

यण्प्रत्याहारघटकवर्णाः आदेशा भवन्ति संहितायां विवक्षितायां इति सूत्रार्थः। उदाहरणं:- सुधी+उपास्यः = सुध्युपास्यः। मधु+अरिः = मध्वरिः। धातृ+अंशः = धात्रंशः। लृ+आकृतिः = लाकृतिः इति॥

[18] ॥ (पेर नंबर 18) एवमादिषु सूत्रेषु तत्तत्सूत्रकृतेषु विधिषु निमित्तांशः सप्तम्यंतेन प्रतिपाद्यते विधेयांशः प्रथमांतेन प्रायशः षष्ठ्यंतेन प्रतिपाद्यते सत्येवं प्रथमांतेन विधेयबोधकेन प्रतीयमानो विधिः किं षष्ठ्यंतार्थस्य स्थाने उत सप्तम्यंतार्थस्येति संदेहे तत्रव्यवस्थार्थमाह:-

(18) तस्मिन्निति निर्दिष्टे पूर्वस्य (1.1.66) इति। तस्मिन्, इति, निर्दिष्टे, पूर्वस्य, इति छेदः। तस्मिन्निति सप्तम्यंतानुकरणं। इतिशब्दः तस्य अर्थपरतां अवगमयति। निरशब्दः नैरंतर्यपरः। दिशिः उच्चरणक्रियः। एवं च तस्मिन्नितीति सप्तम्यंतार्थे निर्दिष्टे इति नैरन्तर्येण उच्चरिते सति पूर्वस्येति तत्र पूर्वस्यैव कार्यं भवतीति सूत्रार्थः। तदाह वृत्तौ सप्तमीनिर्देशेनेत्यादिना

मैरंतर्यं च अन्यवधानं त्यक्तवर्णान्तरै
रैव तदाकृर्णान्तरैरस्येति उदाहरणं :
इको यणचीत्यादिसूत्रं ततहि यणादे
शादिना विधीयमानं यणादेशादिरूपा
दि कार्यं अचीत्यादिसप्तम्यंतानिर्दिष्ट
अच्प्रत्याहारघटकवर्णाद्यव्यवहित
पूर्वस्य इगादेर्भवति ॥

6240. [17] ॥ (पेरनंबर 47) एवं इक स्थानिक
यणादेशस्य यण्संधिकार्यहेत्वसिद्धेवि
इक्षु यण्षु च प्रत्येकशो वर्णचतुष्टयस्य
सत्त्वेन स्थान्यादेशभावस्य अतिप्रसंगे
(दधि + अत्र = दध्यत्र, मधु + अरिः =
मध्वरिः इत्यादीनि इष्टरूपाणि स्यात्
इति तमपरिहारार्थं स्थान्यादेशभावनि
यामकं धर्ममाह :-

(17). स्थानेऽन्तरतमः (1.1.50)
इति। स्थाने, अंतरतमः, इति छेदः
640 स्थानं च प्रसंगः न च प्रकरणात् तत्र
त्स्य तो हि इष्टवर्णानामिति सिध्यति
आन्तर्यं सादृश्यात्मकं अर्थादादेश
इत्याक्षिप्यते ॥

॥ (पेरनंबर 48) ॥ एवं च स्थाने

इति वर्णविधी सूत्रेषु उद्देश्यते यो वा
स्थानां वर्णानां उच्चारणप्रसंगे विधीयमा
नः आदेशः इति विधीयमानः यणादिः
अन्तरतमः इति सदृशतमः भवती
ति सूत्रार्थः ॥

॥(पेर नंबर ४९)॥ तथाच यण् संधौ
इकारादीनां यकारादीनां उद्देश्यविधे
यभावाक्रान्तानां इचुयशानां तालव्य
स्थादि स्थानविवेक प्रकरणोक्त विधया
ता ~~[illegible]~~ स्थानविधया कृतं
सादृश्यभावादेव प्रवृत्तिर्यात् इय
सु धी + उपास्यः इत्यत्र इकारस्य स्था
ने तालुस्थानैकत्वसाम्येन यकारस्य
सुध्युपास्य इति भवति एवं मधु+अरिः
धात्रंशः लाकृतिः इत्यादौ भवति ॥

[१४] (॥ पेर नंबर ५०)॥ अत्र इकारादीनां
स्थाने यणि कृते पूर्वस्य धकारादेः
अनच्परकत्वेन द्वित्वविधायकं शास्त्र
माह ÷

(१४) अनचि च (८।४।४७) इति
अनचि, च, इति छेदः अचोरहाभ्यां द्वे
इति सूत्रात् अचः, द्वे, इति पद

'दयमनुवर्तते। यदीनुनासिकेनुनासि
कोवा इति सन्नात् यरोवा इति चानुवर्त
ते। न + अचः अनच् + तस्मिन् अनचि
इति विग्रहः। नञत्र प्रसज्यप्रतिषेधः।
न तु पर्युदासः। प्रसज्यप्रतिषेधो नाम :-
समासघटकस्यापि नञः पृथक्क्रि
यान्वयसंपादनं पर्युदासस्तूत्तरपदान्व
यः। तदुक्तं :—

प्रसज्यप्रतिषेधोयं।
क्रियया सह यत्र नञ्।
पर्युदासस्तु विज्ञेयः।
यत्रोत्तरपदेन नञ्॥ इति

अच इति पंचमी तस्मादित्युत्तरस्येति
परिभाषया अव्यवहितोत्तरस्येत्यर्थो
पारस्येति। यर इति षष्ठीस्थाने योगे
ति परिभाषया स्थानपदार्थसंबंधः।
अचीति सप्तम्यंततया तस्मिन्निति निर्दि
ष्टे इति परिभाषया अव्यवहितपूर्वस्ये
त्यर्थो पूर्वस्येति। अत्रोक्तविधया प्रस
ज्यप्रतिषेधकत्वेन विधिपरं निषेधपरं
च पृथक् पृथगेव वाक्यद्वयं संपद्यते।
अनुवृत्तानि पदानि वाक्यद्वये निषेध

वाक्येपि संत्येव ॥

॥ (पेर नंबर 51) ॥ तथा च अच इति अच् प्रत्याहार घटक वर्णाव्यवहितोत्तरस्य यर इति यर् प्रत्याहार घटक वर्णस्य स्थाने द्वे इति द्वित्वेति विकल्पेन भवतीति विधिवाक्यार्थः ॥

॥ (पेर नंबर 52) ॥ अचीति अच् प्रत्याहार घटकवर्णाव्यवहित पूर्वस्य द्वित्वं नेति द्वित्वं न भवतीति निषेधवाक्यार्थः ॥

——— जश्त्व संधिः ———

[19] ॥ (पेर नंबर 53) ॥ एवमत्र धकारस्य द्वित्वे सु ध ध य + उपास्य इति स्थिते पूर्वस्य धकारस्य जश्त्व विधायक शास्त्रमाह —

(19) झलां जश् झशि (8.4.53)

पदच्छेद विभक्ति [illegible] भावाः यथा संधि वृत्तौ तद्विधयान्वयं ज्ञातव्यः ॥

॥ (पेर नंबर 54) ॥ एवं च झलामिति झल् प्रत्याहार घटकवर्णानां स्थाने झशीति झश् प्रत्याहार घटकवर्णे परे जशीति जश् प्रत्याहार घटकवर्णाः आदेशा भवन्तीति सूत्रार्थः ॥ अनेन

च पूर्वधकारस्य झलप्रत्याहारघटकत्वेन
झश्यवहितपूर्वत्वेच जशप्रत्याहारघट
कदत्य स्थानकत्वसदृशत्वेन स्थानकृत
कृतसादृश्येन दकारश्चवति ॥

[20] "(पैरनंबर 55)" तथाच सुध्‌ध्य
उपास्यः इति स्थिते यकारस्य संयोगान्त
त्वेन लोपे प्रवृत्ति विधायकसूत्रमाह

(20) संयोगान्तस्य लोपः (8.2.23) इति

72. संयोगान्तस्य, लोपः, इति, छेदः। पदस्येत्य
धिक्रियते संयोगान्तपदं पदपदेन सार्कं
अभेदेनान्वयति संये..ः अन्ते यस्य तत्सं
योगान्तं

"(पैरनंबर 56)" एवंच संयोगान्तस्ये
ति संयोगान्तम संयोगत्वविशिष्टस्य पदस्येति
पद संज्ञिकस्य लोपः इति लोपो भवतीति
सूत्रार्थः।

पैरनंबर 57 [21] ॥ अनेनच सुदध्‌ + य + उपास्यः इत्य
त्र सुदध्यन्‌ कृतय यसंधौ संयोगा
73. न स्य पदस्य विशिष्टस्य लोपे प्रसक्ते
लोपविधेः तदन्तस्य यकारमात्र वि
षयत्वनियामकां परिभाषामाह

(20) अलोऽन्त्यस्य (1.1.52) इति
अलः, अंत्यस्य, इति छेदः पूर्वो स्थाने
योगेऽति परिभाषया षष्ठी स्थाने
इति पदमनुवर्तते षष्ठी पदं, तेनां तेन या
विपरिणाम्यते षि निर्दिष्टस्येत्यध्याह्रियते
अंत्यस्येत्युत्यलइत्यनेन विशेषणं स्थानेविधी
यमानः आदेशः इति लभ्यते ॥

॥(पेरनंबर 58)॥ एवं च स्थाने षष्ठ्या
निर्दिष्टस्येति स्थानषष्ठी निर्दिष्टस्य
स्थाने विधीयमानः आदेशः अंत्यस्ये
ति स्थानषष्ठी निर्दिष्टांत्यस्य अलः
इति अल मात्रस्य स्थाने भवतीति
सूत्रार्थः॥

॥(पेरनंबर 59)॥ अनेनेच संयोगां
तस्यलोपः इति सूत्र विहित संयोगांत
पदस्थानिकः लोपः स्थानषष्ठ्यंत
शब्दनिर्दिष्टस्य सदथ ब इत्येतदन्य
स्य यकारस्यैव भवतीति सिध्यति अत
इयं तत्परिभाषासहकृतस्य संयोगां
तस्य लोपः इति सूत्रस्य संयोगां
त्यपदांत्य लोपः इति सिध्यति तावते
व विधिसूत्रेषु सर्वेष्वपि स्थानषष्ठी

।निर्विशंकत्वात्स्यैव तत्र द्विधा भवतीति
निर्णयात् तत्तन्नेत्र* नसरिम. वाक्य
व्याख्येदत्य गाह शैव णेनैव सूत्रार्थपरि
ष्कारः सांप्रदायिकः॥

॥(पैरनंबर 60)(वार्तिकसत्र।) उपरि
न यकारादेरित्यवर्णस्य लोपे प्राप्ते सुद्ध्युपास्यः
(2) मद्ध्वरिः इत्यादिषु निष्टरूपापत्त्या
तन्निवारणार्थमाह :-

· वा.(1). यणः प्रतिषेधो वाच्यः इति
एतत् वार्तिकं यण् स्थानिकस्य संयो
गान्तलोपस्य प्रतिषेधार्थं नव्यकृत्यपि
इत्यनेन वार्तिकेन यण्लोपप्रतिषेधे
(1) सुद्ध्युपास्यः (2) मद्ध्वरिः (3) धात्रंशः
(4) लाकृतिः इत्यादि अभिमतरूपं सि
ध्यति इति

इति संधिप्रकरणे
यणसंधिप्रक
रणं समा
प्तम्.

—— ००० ——

(अथाजादेजादेश)
संधिप्रकरणम्

[21] ॥(पेर नंबर ८१)॥ एवं संधिप्रकरणी पोहोंचतात संदर्भाप्राप्त विधयात् यण्संधेः प्रासंगिकत्वात् किंवा जस्त्व लोपवर्मधीन विभिरच्य हरैवस्य, विष्णु+ए, नै+अकः पौ+अकः, इत्यादौ एचां यान्तवान्तादेश विधायकं शास्त्रमाह :-

(२१) एचोयवायावः (६.१.७८) इति एचः, अय वायावः, इति छेदः इकोयणचीति सूत्रादचीत्यनुवर्तते एचः इति षष्ठी अयवायावः इति प्रथमाबहुवचनम्। अय् अव्, आय्, आव् इत्येतेषां चतुर्णां द्वंद्वे प्रथमाबहुवचनम् अचीति सप्तम्यंतं तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषया अव्यवहित पूर्वस्येत्यस्योपस्थितिः एच इति षष्ठ्यंततया षष्ठी स्थानेयोगेति परिभाषया स्थानपदार्थसंबंधः॥

॥(पेर नंबर ८२)॥ एवं च अचीति अच् प्रत्याहार घटकवर्णाव्यवहित पूर्वस्य एच इति एच् प्रत्याहार घटकस्य ए ओ ऐ औ इति वर्णचतुष्टयस्य स्थाने अयवाया

वइति अय् अव् आय् आव् इत्यादेशा भवंति इति सूत्रार्थः॥ अत्र चतुर्णां एज्वर्णानां स्थाने अयादयमादेशा विहिताः तत्र कस्य स्थाने को भवतीति संदेहेन अतिप्रसक्तो तन्निवारणार्थं यथा संख्यनियममाह :-

22 ॥(पैरनंबर 63)" यथासंख्यमनुदेशस्समानां "(1.3.10) इति—

... संख्यामनतिक्रम्य यथासंख्य इति पदार्थानतिवृत्तौ अव्ययीभावः अनुदेशो विधिः साम्यं च एकवाक्यगतत्वा संबंधि प्रतिसंबंधित्वादिना ज्ञाह्यं॥

॥(पैरनंबर 64)॥ एतं च समानमिति उद्देश्यविधेयत्वादिना संबंधिप्रतिसंबंधिभावेन साम्यं गतानां अनुदेश इति विधिः यथासंख्यमिति न न्यासंख्यानुरोधेन प्रवर्तत इति सूत्रार्थं तदाह :- समसंबंधी विधिर्यथा यथासंख्यं स्यादिति गवमनयापरिभाषया एजादेशसूत्रे प्रथमस्य प्रथमः द्वितीयस्य द्वितीयः इत्येवमादिना एकारा

दीनां संख्यानुरोधेनैव अयादयादेशो हृ रये विष्णवे इत्यादि पूर्वोक्तोदाहरणसिद्धिः ॥ २२॥

२३ ॥ (पेरनंबर ६५) ॥ एवं वांतादेशप्रसक्त्या अन्यत्रापि वांतादेशसंभवं संगमयितुमाह :–

(२३) वान्तो यि प्रत्यये (६.१.७९) इति वान्तः, यि, प्रत्यये, इति छेदः. वः अन्ते यस्य सः वान्तः अव्, आव्, इत्यन्यतर आदेशः प्रत्यये इति सप्तम्यन्ततया तस्मिन्निति निर्दिष्टेत्यादि परिभाषया अव्यवहितपूर्वस्येत्युपस्थितिः यीति प्रत्यये इत्यत्र विशेषणं विशेषणतात् यस्मिन्नित्यादि परिभाषया तदादिपरं । एचोऽयवायाव इति सूत्रात् एच इत्यनुवर्तमानं ओकारौकाराभ्यामेव स्थानत्वेनान्वेति ॥

॥ (पेरनंबर ६६) ॥ एवं च यि प्रत्यये इति यादिप्रत्ययाव्यवहितपूर्वस्य एच इति सामर्थ्यात् ओकारौकाराऽन्यतरस्य स्थाने वांत इति वकारांतः अव् आव् इत्यन्यतर आदेशो भवतीति सूत्रार्थः तथा च तस्मै हितमित्यर्थे गो। शब्दात् य प्रत्यये

गो + य इत्यत्र अनेन सूत्रेण ओकारस्य अवादेशे गव्यं इति भवतीति। एवं नौ + य = नाव्यम् गो + यूति = गव्यूतिः इति च भवति ॥ [२३]

{ इत्येजादेश संधिप्रक रणं समाप्तम् }

भा॥ वं॥ नरसिंहाचार्यः
यादवगिरिः
13-9-40

{ अथ गुणसन्धि प्रकरणम् } 13-9-40

[२४] ॥ (पेर नंबर 67) ॥ अथ गुणसंधिविधानाय प्रथमं गुणसंज्ञाविधायक शास्त्रमाह:-

(२४) अदेङ्गुणः (1.1.2) इति

अदेङः, गुणः, इति छेदः अत् एङ् च अनयोस्समाहारः अदेङ् इति विग्रहः एङ् पदं प्रत्याहारघटकयोः एदोतोः ग्राहकं ॥

॥ (पेर नंबर 68) ॥ एवं च अदिति अकारः एङिति एकारौकारौ चेति इमे त्रयोपि वर्णाः गुणः इति गुणसंज्ञका भवंतीति सूत्रार्थः अत्र ॥

25 ॥(पेर नंबर 69)॥ अत्र अदिति अकारः ग्राहकः (॥) "अणुदित्सवर्णस्य चाप्रत्ययः" (1.1.39) इति शास्त्रबलेन तद्दीर्घादीनां सवर्णानां ग्राहकस्स्यात्, तदा च वृद्धिसंज्ञाविषयभूतस्य आकारस्य गुणसंज्ञाप्रसक्तो संज्ञयोस्सांकर्यापत्तिः इति तद्वारणार्थं अतस्य ह्रस्वाकारमात्रबोधे नियामकं शास्त्रमाह॥

(25) तपरस्तत्कालस्य (1.1.70) इति

तपरः, तत्कालस्य, इति छेदः।

तः परः यस्मात् सः तपरः, तात्परः तपरः इति च तपरपदं तत्रादिना द्वेधापि विगृह्यते स एव कालः यस्य सः तत्कालः तस्येति विग्रहः अणुदित्सवर्णस्य चाप्रत्ययः इति सूत्रात् अणित्यनुवर्तते एवं च अस्मिन् शास्त्रे तपर इति तकारपरकः तकारात्परश्च अण् तत्कालस्येति निर्दिष्टस्य अचः यः कालः तत्कालमात्रोच्चार्यमाणस्य अणः ग्राहको भवतीति सूत्रार्थः॥

॥(पेरनंबर 70)॥ तथाच यत्र तकारात्परः तकारपरको वा अण् एककमात्रिकः

तत्र ग्रहणकशास्त्र बलात् प्राप्तं। द्विमात्रिकस्य त्रिमात्रिकस्य च ग्रहणमनेन व्यावर्तितं भवति। तथा यत्राण् तपरकः द्विमात्रिकोनिर्दिश्यते तत्र एकात्रिमात्रिकयोः ग्रहणं न भवति एवं त्रिमात्रिकस्यापि ज्ञेयं नेम अत्, इत्, उत्, ऋत्, इत्यादि यः उदात्तानुदात्त स्वरितभेदेन च प्रत्येकशः वर्णानां ज्ञानत्व अष्टादशानां ऋदितिनुष्टादशानां ऋकार लृकारयो स्सवर्ण्यात्॥

॥(पेर नंबर 71)॥ प्रकृते च अदेङ् गुणः इति गुणसंज्ञाविधायकसूत्रस्थं अत्पदं तपरक ह्रस्वाकारमात्र बोधकामीति न संज्ञान्तर्य सांकर्यं॥ [25].

[26] ॥(पेर नंबर 72)॥ गुणसंधीविधायकं सूत्रमाह :—

(26) आद्गुणः (6.1.87) आत् गुणः इतिच्छेदः इकोयणचीति सूत्रावचीत्यनुवर्तते आदिति पंचम्यंतं ननु तपरं तस्माद् षाड्शानां अकार भेदानां ग्रहणं भवति पूर्वः पूर्वपरयोरित्यधिक्रियते संहितायामिति चाधिक्रियते विवक्षितायामिहसूत्रा दृश्यते पूर्वपरयोरित्यधिकारबलात्

तस्मादिति तस्मिन्निति च परिभाषाद्व यं नात्र प्रवर्तते अचीति सप्तमी आदि अवानिबोधिना पंचमी पूर्वपरयो रिति षष्ठ्यंततया षष्ठीस्थाने योगेति प रिभाषया स्थाने इत्युपस्थितेन संबध्यते ॥

॥ (पेर नंबर 73) ॥ ग्रावं च आद्गिस्व र्णात्र अचीति अच प्रत्याहारघटक वर्णे परे सति संहितायामिति संहितायां विवक्षि तायां पूर्वपरयोरिति पूर्वस्य अकारस्य प रस्य अचश्च स्थाने एकदूति एकराव गुण इति गुणसंज्ञिकोवर्णः आदेशो भ वतीति सूत्रार्थः ॥

उदाहरणम् :-

उप + इंद्रः इत्यत्र प्रकारोत्तरवृत्ते रकारात् उत्तर पदादिः इकारः पकारो वर्ति ते अतः अकारः पूर्वः इकारः परः किं च अकारः कंठ्यः इकारस्तालव्यः अन योस्थाने गुण संज्ञिकाना अकार एका र ओकाराणां मध्ये कण्ठतालुस्थानि कः कण्ठतालुस्थानिकः एकारः आदेशो भ वति स्थान सादृश्यात् न दुतं स्थानेंतरत

म इति सूत्रेण तदुक्तं उपदेशः इति ॥
एवं गंगा उदकमित्यत्र कण्ठस्थानिकस्य आकारस्य ओष्ठस्थानिकस्य उकारस्य च स्थाने गुणसंज्ञिकः स्थानत, आन्तरतम्यात् कण्ठोष्ठस्थानिकः आदेशो भवति तदाह गंगोदकमिति ॥

॥ 87 ॥ ॥ (पेर नंबर 72) ॥ वक्ष्यमाण सूत्रस्य स्पष्टपठनाय रप्रत्याहारसिद्ध्यर्थं लण्सूत्रस्थाकारस्य इत्संज्ञाप्रत्यायकं इत्संज्ञाविधायकं सूत्रमाह:—

(87) उपदेशेऽजनुनासिक इत् (1.3.2)

उपदेशे, अच्, अनुनासिकः, इत्, इति छेदः संज्ञाप्रकरणात् संज्ञेति लभ्यते उपदेशः प्राथमिको अवदेशः विषयभूत धातुसूत्रादिः उपशब्दः प्राथम्यार्थकः भावे घञ् तस्य च विषयतया धात्वादिवृत्तित्वात् तदुक्तं :—

धातुसूत्रगणोणादि ॥
वाक्यलिंगानुशासनम् ॥
आगमप्रत्ययादेशाः ॥
उपदेशाः प्रकीर्तिताः ॥

उपदेशे इति अनुनासिक इति अजित्य

न्यत्रविशेषणतयान्वेति ॥

॥ पेरनंबर 75 ॥ शावंच उपदेशे इति धातुसूत्रादिवृत्तिः अनुनासिकः इति। अनुनासिकसंज्ञिकः अच् इति अच्प्रत्याहारस्थ टकवर्णः इदितिन्दुअंज्ञिकोभवतीति सूत्रार्थः तदाह :- उपदेशे अननुनासिकोऽजित्संज्ञः स्यादिति ॥

॥पेरनंबर 76॥ उपदेशविषयभूतानां अचां अनुनासिकत्वनिर्णायकप्रमाणमाह :- प्रतिज्ञानुनासिक्याः पाणिनीयाः इति प्रतिज्ञायते अभ्युपगम्यते इतिप्रतिज्ञा नित्यस्त्रीलिंगोऽयं आतश्चोपसर्गे इत्याकारान्तात् प्रतीत्युपसर्गपूर्वकज्ञाधातोः कर्मण्यङ् अभ्युपगम्यमानामित्यर्थः अनुनासिकस्य भावः आनुनासिक्यं येषां ते प्रतिज्ञानुनासिक्याः पाणिनीयाः पाणिनिशिष्याः अनुनासिक्यं पाणिनिशिष्यपरंपरया इदानीं तनैः ज्ञातव्यमित्यर्थः तेषां सूत्रस्थावर्णस्य पाणिनिशिष्यपरंपरया अनुनासिकमभ्युपगमस्यूहनया सूत्रेणानेन तस्येत्संज्ञाया

हयवरट्सूत्रस्थ रेफस्य अनेन साकं
रइति प्रत्याहारे उत्तरसूत्रस्थ रपरत्वस्य
रकारलकारउभयपरत्वं सिध्यति॥

[पृ ४] ॥(पेरनंबर 77)॥ एवं घटक ज्ञानस्य
घटितवाक्यार्थज्ञानस्य पदार्थज्ञानेकार
णकत्वनियमानुरोधेन इदानींरपदार्थज्ञा
ने जाते तद्विशिष्टं सूत्रमाह ;-

(२४) उरण् रपरः (१।१।५१)

उः, अण्, रपरः इति छेदः उः अण्
इति पदत्रयं गुणवृद्ध्यादिसूत्रसिद्ध
ऋकारस्थानिकअणादेश अनुवादप
रं अनुवादे परिभाषाणां अनुपस्थि
त्या स्थाने पदं स्थानेऽन्तरतम इति
सूत्रादनुवर्तते अत्र अण्पदं पूर्वेण
णकारेण प्रत्याहारः रः परः यस्मा
त्सः रपरः इति विग्रहः उः इति
ऋकारस्य षष्ठ्यन्तपदं ऋ इति त्रि
शतः संज्ञेति अणुदित्सवर्णस्य
चाप्रत्ययः इति सूत्रे उक्तं॥

॥(पेरनंबर 78)॥ एवं च उरिति
त्रिंशतः संज्ञाभूतस्य साधारस
मानाधिकस्य तत्र सूत्रेषु उद्देश्य

नियोपान्तस्य अकारस्य स्थाने इति प्र
संगे सति उच्चारणप्रसंगे आणीति आ
दिश्यमानः अण् प्रत्याहार घटको वर्णः
रपर इति रप् प्रत्याहार घटक रेफ लकार
योः यतरपरको भवतीति सूत्रार्थः।
कृष्ण + ऋद्धिः इत्यत्र अकार ऋकार
योः स्थाने आद्गुणः इति गुण विधायक
सूत्रेण अकारात्मके गुणे स्थाने स्था
नत आंतरतम्यात् आदिष्टे तस्य
प्रकृतिसूत्रेण रपरत्वे कृष्णर्द्धिरि
त्युदाहरणम्। एवं तव + लृकारः इत्य
त्र अकार लृकारयोः स्थाने तेनैव
गुणसंधिसूत्रेण स्थानत आंतरत
म्यात् आदिश्यमानः अकारः प्रकृ
तसूत्रेण लपरो भवतीति व्यवस्था॥

— इति — 28

28 अथ लोपसंधिः —
दिसंबर 79

हरे + इह। विष्णो + इह इत्यादौ
एचोऽयवायावः इति वांतयाता
देशयोः कृतयोः तत्र यकार वका
र लोपविधायकं सूत्रमाह :—

(२७) 

लोपः शाकल्यस्य (८. ३. १९) इति ।
लोपः, शाकल्यस्य, इति छेदः भोभगो
अघो अपूर्वस्य इति सूत्रात् अपूर्वस्य
अशीति चानुवर्तते पदस्य इत्यधिक्रियते
व्योर्लघुप्रयत्नतरः शाकटायनस्य इति
सूत्रात् व्योरित्यनुवर्तते पदस्येति अपू
र्वस्येति च द्विवचनान्ततया परिणते
व्योरित्यनेन सम्बध्यते अः पूर्वो ययो
स्तौ अपूर्वौ तयोरिति विग्रहः पद
स्येति विशेषणात् पदान्तलाभः शा
कल्यग्रहणं विकल्पार्थं अशीति सप्त
म्यन्ततया तस्मिन्निति निर्दिष्टे पूर्व
स्य इति परिभाषया अव्यवहितपूर्वस्य
त्युपस्थितिः ॥

॥(पेरनंबर ४०)-॥ सांबृ च अशीति
अशूकृत्या । भ्राद्घटकवर्णा । व्यवहि
तपूर्वयोः अपूर्वयोरि अवर्णपूर्वक
योः पदस्येति पदान्तयोः व्योरिति
वकारयकारयोः स्थाने लोप इत्य
नुच्चारिणं शाकल्यस्येति शाकल्य
मते तु (विकल्पेन) भवतीति
सूत्रार्थः ॥ हरे + इह २ हरय इह

स्थे कृवि शास्त्रेगुणवृद्ध्यादौ प्रवर्तमाने इदं शास्त्रमिति त्रिपादीस्थं यवलोपविधायकं शास्त्रमसिद्धमिति दृष्ट्या विषयीभूतं भवतीति सूत्रार्थः। एवमुत्तरसूत्रेष्वपि न च सूत्रजाल शेषत्वेनाद्वितीयमानमिदं सूत्रं त्रिपाद्यामत्यविशेषेण पूर्वस्मिन् शास्त्रे प्रवर्तमाने इदं शास्त्रमसिद्धमिति पूर्वं प्रति परशास्त्रस्य असिद्धत्वं बोधयति प्रकृते च विष्णाइह हर इहेत्यादौ लोपः शाकल्यस्य इति लोपविधायक त्रिपादीस्थ शास्त्रस्य आद्गुणः इति सपादसप्ताध्यायीस्थ गुणादि संधि विधायक शास्त्रापेक्षया असिद्धत्वेन गुणादि कार्यं न प्रवर्तते पूर्वापर स्वरयोर्हि गुणः तयोः पौर्वापर्यं च यवलोपे नैव सिध्यति तद् सिद्धौ यवलोपादर्शनान् स्वरयोर व्यवहितपौर्वापर्य रूपनिमित्ताभावेन आद्गुणादि शास्त्राणामप्रवर्तनमिति सिद्धं॥

{ इति लोप
सन्धिः
उपरस्ता }

(अथ वृद्धिसन्धिः)
उपपद्यस्यते

[31] ॥(पेर नंबर ८३)॥ वृद्धिसंधिविधा यकोत्तरसूत्रस्य वृद्धिपदार्थज्ञानाय वृद्धि सँज्ञाविधायकं सूत्रमाह :—

(31) वृद्धिरादैच् (1.1.1.) इति ।
वृद्धिः, आदैच, इति छेदः, आच्च ऐच्च अनयो स्समाहारः आदैच् ॥

॥(पेर नंबर ८४)॥ एवं च आदिति आकारः ऐजितैच् प्रत्याहार घटकवर्णौ ऐ कारौकारौ च वृद्धिरिति वृद्धिसंज्ञिको भवतीति सूत्रार्थः ॥ [31]

[32] ॥(पेर नंबर ८५) वृद्धिसन्धि सूत्रमाह :— (32) वृद्धिरेचि (6.1.88) इति । वृद्धिः, एचि, इति छेदः आद्गुणः इति सूत्रात् आदि ति पञ्चम्यन्तमनुवर्तते तत्र तपरकरण मुखसुखार्थं क्रियते तच्च गृह णकं । अत्र बलात् दीर्घादीनामपि ग्राह कमेव अत एव आद्गुण इति सूत्रवृत्तौ अवर्णादित्युक्तं वृत्तिकारेण ॥

॥(पेर नंबर ८६)॥ एवं च आदित्यवर्णा

तत्र एचीति एच् प्रत्याहार घटक वर्णेषु परे
सति पूर्वपरयोः इति पूर्वस्य अवर्णस्य पर
स्य एच इच स्थाने वृद्धिः इति वृद्धिसंज्ञकः
एकः इति एकोवर्णः आदेशो भवतीति
सूत्रार्थः ॥ —

यथा कृष्ण + एकत्वं इत्यादौ कृ
ष्णैकत्वं गंगा + ओघः = गंगौघः देव +
ऐश्वर्यं = देवैश्वर्यं कृष्ण + औत्कंठ्यमि
त्यादिकं उदाहरणानि अत्र कृष्णैकत्वं
देवैश्वर्यमित्यनयोः पूर्ववदान्त्यः ह्रस्वा
कारः गंगौघः कृष्णौत्कंठ्यमित्यन
योः पूर्वपदान्तिमः आकारः। एवं ए
ओ ऐ औ इत्येषां चतुर्णां अपि वर्णा
नां क्रमेण चतुर्षु उदाहरणेषु एकैक
स्य उत्तरपदादिमत्वं वृद्धिरेकवर्णः वृ
द्धिरादैच् इति सूत्रेण आ ऐ औ इति त्र
य एव अवगताः तेषु ऐकारौकारयोरेवा
त्र प्रवृत्तिः ~~आ~~ न तु आतस्य। अत्र एकारै
कारयोः परवर्णत्वं तत्र तयोः कण्ठता
लुस्थानिकतया तादृशः ऐकार एवा
देशः यत्र ओकारौकारयोः परवर्ण
त्वं तत्र औकार एव तयोः कण्ठोष्ठस्थानिक
त्वात्

तेषु उदाहरणेषु सर्वत्र 'आद्गुणः' इति गुणसंधिः प्राप्तः तस्य अच् मात्र निमित्तत्वेन औत्सर्गिकत्वात् उत्सर्गः सा तु अन्यमुत्सर्गतः प्राप्तत्वात् तथापि राज निमित्तकस्य अस्य वृद्धेः विशेषात्मकतया उत्सर्गापवादन्यायेन गुणापवादत्वमिष्यते ॥

Patti Chellayya
Iron Merchants
Pattivari St
Ongole.
Prakasam - Dt
(A.P.)

Sri Parasara Sudarsana Bhatta
230, South Uttara Street
Srirangam.
Tiruchirapalli - Dt
(Tamil nadu)

